ॐ १

ॐश्रीगणेशायनमः ॐपूर्णमदःपूर्णमिदंपूर्णात्पूर्णम
दुच्यते पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते ॐशान्तिः
शान्तिःशान्तिः ॐआत्मानमखण्डमण्डलाकारमाव्रत्यसक
लब्रह्माण्डमण्डलंस्वप्रकाशमयंध्यायेत् श्रीगुरुःसर्व
कारणभूताशक्तिः तेननवरन्ध्ररूपोदेहः नवशक्तिरू
पंश्रीचक्रम् वाराहीपितृरूपा कुरुकुल्लावलीदेवनामा
ता पुरुषार्थःसागरः देहोनवरत्नद्वीपः त्वगादिसप्तधा

त्वरोमसंयुक्ताः सङ्कल्पाः कल्पतरवः तेजः कल्पकोद्यानं
रसनया भाव्यमाना मधुराम्ललवणतिक्तकटुकषायाः
षड्रसाः षड्ऋतवः ज्ञानमग्निः ज्ञेयं हविः ज्ञानज्ञातृज्ञे
यानामभेदभावनं श्रीचक्रपूजनम् नियतिसहिताः
शृङ्गारादयो नव रसाः अणिमाद्याष्टसिद्धयः काम
क्रोधलोभमोहमदमात्सर्यपुण्यपापमय्या ब्राह्म्याद्यष्टश
क्तयः आधारनवकं मुद्राशक्तयः पृथिव्यप्तेजोवायुरा

ओं २

2

काशशब्दस्पर्शरूपरसगन्धवाक्पाणिपादपायूपस्थरस
नेन्द्रियाणिविकाराः कामाकर्षिण्याद्याःषोडशशक्तयःवच
नादानगमनविसर्गानन्दादानोपादानोपेक्षा ख्यानङ्गकुसु
माद्यष्टशक्तयः पूषाऽलंबाकुहूविश्वोदरीवरुणाहस्तिजि
ह्वायशोवतीगान्धारी पुरुषाशंखिनीसरस्वती इडापिङ्ग
लासुषुम्णाचेतिचतुर्दशनाड्यः सर्वसंक्षोभिण्यादिच
तुर्दशारगादेवताः प्राणापानव्यानोदानसमाननाग

कूर्मकृकरः देवदत्तधनञ्जयश्चेति दशवायवः सर्वसिद्धि
प्रदादिवहिर्दशसारगादेवताः एतद्वायुसंसर्गोपाधिभे
देनरेचकः पोषकोदाहकः प्लावकः स्रावकश्चेति प्राण
मुख्यत्वेनजाठराग्निर्भवति तारकोऽङ्गारकः क्षोभकोमो
हकश्चापानमुख्यत्वेनपञ्चविधोऽस्ति तेनमनुष्या
णान्देहगाः भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं चतुर्विध
मन्नंपाचयन्ति एतद्दशकं वह्निकलाः सर्वंत्रायन्तर्दशा

ॐ. ३

3

रगादेवताः क्षीनोपाख्यवेद्धःस्वेच्छा स सत्त्वरजस्तमोगुणा इ
तिवशिन्यादिशक्तयोऽष्टौ शब्दस्पर्शरूपरसगन्धाः पञ्चत
न्मात्राः पञ्चपुष्पबाणाः मन इक्षुधनूरागपाशो द्वेषोङ्कु
शः अव्यक्तमहत्तत्त्वमहदहङ्कार इतिकामेश्वरीवज्रेश्वरीभ
गमालिन्यन्तस्त्रिकोणाग्रगादेवताः पञ्चदशतिथिनि
त्याः षोडशानिरुपाधिकाचस्मादेवताकामेश्वरीसदानन्द
स्वरूपा सदानन्दपरिपूर्णाचनस्वात्मैक्यपरदेवता स

लिलमितिसाहित्यकरणम् अग्निनास्तिकर्तव्यमकर्तव्य
मुपचारः तस्यवाह्यान्तःकरणमेकीकृत्यास्थिनिरासनेर
क्तशुक्लयोरेकीकरणंपाद्यं उज्वलदाराख्यानुसंधानमि
त्याचमनं चिद्वन्हमासिसर्वाङ्गस्रवणमितिस्नानम्
चिदग्निस्वरूपंचिदानन्दस्वरूपंपरानन्दस्फुरणमिति
वस्त्रम् प्रत्येकंसप्तविंशतियामभिन्नत्वाद्ज्ञानक्रियात्म
केच्छाज्ञानक्रियात्मकब्रह्मग्रन्थिलसत्तन्तूब्रह्मनाडी

ॐ॰ तत्र सर्वातिरिक्तवस्तुसङ्गहीनस्मरणं विस्मरणम् साक्षि
ष त्वेन परिपूर्णात्मस्मरणं गन्धम् समस्तविषयाणां मनः
५ स्थैर्येणात्मसन्धानं कुसुमम् तेषामेव सर्वदाऽस्वीकर
णमिति धूपपवनः अनवच्छिन्नोज्ज्वलस्वात्मप्रकाशो
दीपः समस्तद्वैताद्वैतविसर्जनं नैवेद्यम् अवस्थात्र
याणामेकीकरणं ताम्बूलम् मूलाधारादिब्रह्मरन्ध्र
पर्यन्तं ब्रह्मरन्ध्रादि मूलाधारपर्यन्तं गतागतरूपेण

प्रदक्षिणा सर्वदावस्थान्तरीयानमस्कारः देहशून्यं प्रथमाह
त्यानिमज्जनं वलिहरणम् सत्यमस्तिनास्तिकर्त्तव्यमकर्त्त
व्यमुदासीनमित्यात्मनि विलापनं होमः श्रीमत्पाडुका
निमज्जने परिपूर्णं ध्यानम् एवं मुहूर्त्तत्रयं मुहूर्त्तद्वयं मु
हूर्त्तमात्रं घटिकामात्रं भावनापरो जीवन्मुक्तो भवति तस्य
चिंतितकार्याण्यप्रयत्नेन सिध्यन्ति स्वयमेव शिवयोगीति
कथ्यते कादिहादीनामवलोके भावनापरो जीवन्मुक्तो भ

ओं वति इत्युपनिषद् ओंपूर्णमदःपूर्णमिदमितिपठेत् श्री
५ चक्रभावनोपनिषत्सम्पूर्णा ॥

5

२८५